सर्वाणि भूतान्यवन्ति तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' (बृ० १।५।२३ ) इत्यादिभेदव्यपदेशलिङ्गेभ्यः ॥ २१ ॥

नन्वेवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य स्यात्ततश्चैषामावृत्तिः प्रसज्येतेत्यत उत्तरं भगवान्बादरायण आचार्यः पठति—

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

नाडीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं शास्त्रोक्तविशेषणं गच्छन्ति 'यस्मिन्नरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि यस्मिन्नैरंमदीयं सरो यस्मिन्नश्वत्थः सोमसवनो यस्मिन्नपराजिता पूर्ब्रह्मणो यस्मिंश्च प्रभुविमितं हिरण्मयं वेश्म यश्चानेकधा मन्त्रार्थवादादिप्रदेशेषु प्रपञ्च्यते ते तं प्राप्य न चन्द्रलोकादिव भुक्तभोगा आवर्तन्ते। कुतः। 'तयोर्ध्वमायन्नमृतत्वमेति' (छा० ८। ६।६, कठ० ६।१६ ), 'तेषां न पुनरावृत्तिः' ( बृ० ६।२।१५ ), 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' ( छा० ४।१५।६ ), 'ब्रह्मलोकमभिसंपद्यते' ( छा० ८।१५।१ ), 'न च पुनरावर्तते' ( छा० ८।१५।१ ) इत्यादिशब्देभ्यः। अन्तवत्त्वेऽपि त्वैश्वर्यस्य यथाऽनावृत्तिस्तथा वर्णितम् 'कार्यात्यये तदध्यक्षेण सहातःपरम्' (ब्र० सू० ४।३।१० ) इत्यत्र। सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति। अनावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति ॥ २२ ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमत्परमहंसपरिव्राजकाचार्य-
श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ
चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तमिदं ब्रह्मसूत्रशाङ्करभाष्यम् ॥

# बादरायणप्रणीतब्रह्मसूत्राणां वर्णानुक्रमः ।



समाप्तेयं वादरायणप्रणीतब्रह्मसूत्राणां वर्णक्रमसूची ।



# निर्णयसागरेऽङ्कितानि विक्रेयसंस्कृतपुस्तकानि।



श्रीमच्छंकराचार्यकृतं—

## १ रत्नपञ्चकं (सोपानपञ्चकं) सभाष्यं,

२ विद्वदनुभवानन्दलहरी ( शिवानन्दलहरी ), ३ शतश्लोकीसार-
संग्रहः, ४ कौपीनपञ्चकं, ५ एकोविष्णुरितिपद्यस्य
श्रीनिवासकृतव्याख्यानं.

इति पद्यानामपूर्वाणां विषयाणां संग्रहः मू. ३ आ., मा. १॥ आ.

| | कि. रु. | आ. | ट. रु. | आ. |
|---|---|---|---|---|
| रामगीता रामगीतामाहात्म्यं च. ... ... ... | ० | १ | ० | १ |
| लघुयोगवासिष्ठः—आत्मसुखकृतः, वासिष्ठचन्द्रिकाटीकासहितः | ५ | ० | १ | ० |
| ललितासहस्रनाम—भास्कररायप्रणीतसौभाग्यभास्कर-भाष्यसहितं तृतीयं संस्करणम्. ... ... ... | १ | १२ | ० | ४ |
| वेदस्तुतिः—( श्रीमद्भागवतगता ) लोकेव्यवायेतिश्लोकः, जन्माद्यस्येतिश्लोकश्च, काशीनाथोपाध्यायकृतव्याख्योपबृंहित-श्रीधरीव्याख्या. ... ... ... ... | ० | १२ | ० | ४ |
| वेदांतसारः—नृसिंहसरस्वतीस्वामिकृत-सुबोधिन्या, रामतीर्थ-विरचित-विद्वन्मनोरञ्जनीटीकया, जे. ई. जेकब एतेषा-माङ्गलटिप्पण्या पाठान्तरैश्च समलंकृतः. ... ... | १ | ४ | ० | ४ |
| शिवगीता—पत्रबद्धा. ... ... ... ... | ० | ८ | ० | २ |
| शिवगीता—कौशेयबद्धा. ... ... ... ... | ० | १२ | ० | २ |
| शिवगीता—लक्ष्मीनरहरिसूनुकृत-बालानंदिनीव्याख्यासहिता. | ० | ८ | ० | २ |
| आशौचनिर्णयः—त्र्यम्बककृतः. ... ... ... | ० | १॥ | ० | १ |
| पुरुषार्थचिंतामणिः—श्रीमद्रामकृष्णभट्टसूनुविष्णुभट्टकृतः विशेषतः शोधिता द्वितीयावृत्तिः। ... ... ... | २ | ८ | ० | ६ |

| | कि. रु. | आ. | ट. रु. | आ. |
|---|---|---|---|---|
| मनुस्मृतिः—कुल्लूकभट्टकृतमन्वर्थमुक्तावलीव्याख्यासहिता. ... | २ | ८ | ० | ८ |
| याज्ञवल्क्यस्मृतिः—( मिताक्षराव्याख्यासहिता ). ... | २ | ८ | ० | ८ |
| स्मृतिकौस्तुभः—( श्रीमदनंतदेवभट्टकृतः ). ... ... | २ | २ | ० | ८ |
| सनातनमानवधर्मः—मनुस्मृतिगतः ... ... | ० | २ | ० | १ |
| कारिकावली—( सिद्धांतमुक्तावलीसहिता ). ... ... | ० | १० | ० | २ |

# गादाधरीपञ्चलक्षणी ।

## चिन्तामणि-दीधिति-गादाधरी-कृष्णंभट्टीय-न्याय-रत्नेति न्याय-पञ्चग्रन्थीसंग्रहः । सिंहव्याघ्रलक्षणसार्वभौमपरिष्कारोपेतः ।

हा न्यायशास्त्राचा मुख्य ग्रंथ इतरांनीं जरी छापलेला आहे तथापि तो आह्मीं पंडितांकडून प्राचीन पुस्तकांवरून शोधवून पाठांतरादिकांनीं अलंकृत करून विद्यार्थ्याला सुबोध होईल असा छापलेला आहे. कि. १॥ रु. ट. ४ आ.

| | कि. रु. | आ. | ट. रु. | आ. |
|---|---|---|---|---|
| तर्ककौमुदी—लौगाक्षिभास्करकृत. ... ... ... | ० | २ | ० | १ |
| तर्कसंग्रहः—न्यायबोधिनी–पदकृत्यव्याख्याटिप्पणी. ... | ० | ६ | ० | २ |
| तर्कसंग्रहचंद्रिका—( महामहोपाध्याय श्रीमदन्नंभट्टकृत तर्क-संग्रहव्याख्या ) पं० मुकुन्दशर्मकृत. ... ... ... | ० | ६ | ० | २ |
| न्यायलीलावती—श्रीमद्वल्लभाचार्यविरचित. ... ... | ० | १४ | ० | ४ |
| प्रमेयकमलमार्तंडः—( चन्द्रप्रभाचार्यविरचित ). ... | ४ | ० | ० | ८ |
| भास्करोदया—तर्कसंग्रहदीपिकाप्रकाशाची ( नीलकंठीची ) व्याख्या. ... ... ... ... ... | १ | ४ | ० | ४ |
| भाषापरिच्छेदः—मैथिल–मुकुन्दझा–प्रणीतः कारिकावली अर्थदीपिकासहिता. ... ... ... ... | ० | १० | ० | २ |

पाण्डुरङ्ग जावजी,

निर्णयसागराख्यमुद्रणालयाधिपतिः ।

